

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥
॥ श्रीमते अग्रदेवाचार्याय नमः ॥

# ॥ श्रीधनुर्बाणाष्टकम् ॥

*This text has been prepared by Vishal Pandey (B.Tech IIT Kanpur) with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara Jagadguru Rāmānandāchārya Śrī Svāmī Rāmabhadrāchārya***

**सीतानाथ समारम्भां रामानन्दार्य मध्यमाम् ।**
**अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम् ॥**

# अथ श्रीधनुर्बाणाष्टकम्

**शिवपार्वत्यावूचतुः**

राम ब्रह्म राजपुत्र हस्तेऽन्जस्रं विराजितौ ।
सूर्यानन्त प्रभावन्तौ धनुर्बाणौ नमाम्यहम् ॥ १ ॥

असुराणां घातकौ च सुराणां भयनाशकौ ।
निहितेभ्यो मोक्षदौ च धनुर्बाणौ नमाम्यहम् ॥ २ ॥

स्वचिह्नबाहु मूलेभ्यः सीतारामाङ्घ्रि भक्तिदौ ।
श्रीराममुष्टि सौभाढ्यौ धनुर्बाणौ नमाम्यहम् ॥ ३ ॥

ध्यायातानन्दकरौदिव्यौ योगीनांध्यान दुर्लभौ ।
नित्यं रामायुधाख्यौ तौ धनुर्बाणौ नमाम्यहम् ॥ ४ ॥

मम शूलाच्छक्ति शूलात्विष्णुचक्रात्परात्परौ ।
दिव्यन्तौ राममुष्ट्या श्रीधनुर्बाणौ नमाम्यहम् ॥ ५ ॥

रासे श्रीरामचन्द्रस्य चार्वाङ्गाभिनयेङ्गिते ।
चलच्चमत्कृतौ वेतौ धनुर्बाणौ नमाम्यहम् ॥ ६ ॥

श्रीरामवनिताभिश्च तद्विश्लेषे समर्चितौ ।
स्पृशन्तीनां मोदकरौ धनुर्बाणौ नमाम्यहम् ॥ ७ ॥

असुरेभ्यो भीतिप्रदौ सुरेभ्यः शरणं प्रदौ ।
भूमिभार हरावेतौ धनुर्बाणौ नमाम्यहम् ॥ ८ ॥

**॥ इति धनुर्बाणाष्टकम् ॥**